श्रीगणेशायनमः ॥ अविघ्नमस्तु ॥ मार्तंडोऽवतुवाचंनःपादैर्जाड्यतमोहरः ॥ वृत्तवद्धतनुःसेव्योभीष्टदोविश्वलोचनः ॥१ ॥ अर्थद्वयवाची तत्रप्रथ
मसूर्यपक्षे मार्तंडःश्रीसूर्यः नोऽस्माकंवाचंअवतुरक्षतु किंलक्षणोमार्तंडः वृत्तवद्धतनुः वृत्तेमंडलेवद्धातनुर्यस्यसतथा तथाचस्मृतौ सशंखचक्रंर
विमंडलेस्थितंकुशेशयकांतमनंतमच्युतमित्यादिः श्रुतिरपि यएषएतस्मिन्मंडलेपुरुषःसोग्निरित्यादिः पुनःकिंलक्षणः पादैःकिरणैःजाड्यतमो
हरः जाड्यपातक शीतंवा तमोंधकारस्तद्धरतीतितथा पुनःकिं० सेव्यः सेवितुंयोग्यःसेव्यः अभीष्टफलदातृत्वात् पुनः अभीष्टदः सेवितः
सन्नभीष्टार्थदायीत्यर्थः पुनःकथंभूतः विश्वलोचनः विश्वलोच्यतेअनेनेतिविश्वलोचनः लोकचक्षुर्ग्रहेश्वरइत्यादिल्लदयेउक्तत्वात् प्रकाशक
त्वात् अथग्रथपक्षे मार्तंडः मुहूर्तमार्तंडःनः वाचम् अवतु किंलक्षणः वृत्तवद्धतनुः वृत्तानिप्रहर्षिणीशार्दूलविक्रीडितानि तैर्निवद्धातनुर्यस्यसतथा
पुनः० पादैर्जाड्यतमोहरःपादैर्वृत्तचरणैर्जाड्यम्मूर्खत्वतदेवतमःतद्धरतीतितथा पुनः० सेव्यः निरंतरंपठनीयइत्यर्थः पुनः० अभीष्टदः यथोक्त
मुहूर्तव्युत्पत्तिकरणादभीष्टार्थसिद्धिकारीत्यर्थः पुनः० विश्वलोचनः समयप्रकाशकत्वात् ॥१ ॥ कुर्वेमुहूर्तमार्तंडटीकामार्तंडवल्लभाम् ॥ इयमाकल्प
मेतेनदीव्याद्विप्रास्यवेश्मसु ॥ २ ॥ इहशास्त्रेतावत्संबंधाभिधेयप्रयोजनान्युच्यंते आम्नायादिविनिःसृतामिद वेदांगमितिसंबंधः उक्तंच नारदमुनि
नास्वसंहितायाम् वेदस्यनिर्मलंचक्षुर्ज्योतिःशास्त्रमनुत्तमम् अस्यशास्त्रस्यसंबधोवेदांगमितिधातृतइति अत्राप्युक्तम् पूर्ववाक्यार्थमादाग्रसंगो
यंचितोलघुरिति - त्याज्यनक्षत्राद्यर्तुलग्नगोचरगर्भाधानादिसंस्कार विवाहाग्न्याधानवास्तुयात्रामिश्रानध्यायपल्लीग्रहगोचरसंक्रांति कथनमभि

धेयम् तथाचनारदः अभिधेयंचजगत शुभाशुभनिरूपणमिति अस्य प्रयोजनमुहूर्तैर्नानाकार्यसाधन अस्यसम्यग्ज्ञाना मोक्षावाभिरीधवाकि
मेभिरुक्तैरित्यथोच्यते नृणांसंबंधाभिधेयप्रयोजनकथनात् शास्त्रेप्रवृत्तिर्जायते उक्तंच सिद्धिः श्रोतृप्रवृत्तीनांसंबंधकथनाधतः वस्मात्सर्वेषुशास्त्रे
षुसर्वथ पूर्वमुच्यते किमेवाभाभिधेयस्यादितिशृष्टस्तुकेनचित् यदिनप्रोच्यतेतस्मैफलशून्यंतुतद्भवेत् सर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचि
त् यावत्प्रयोजननोक्तंतावत्केननगृह्यतइति इहशास्त्रेकस्याधिकारइतिप्रोच्यते द्विजस्यैव वेदांगत्वात् यतःषडंगोवेदोद्विद्विजैरेवाध्ययनीयो
ज्ञातव्यश्च तथाचोक्तंभास्करीयसिद्धांतशिरोमणौ वस्माद्द्विजैरध्ययनीयमेतत् पुण्यरहस्यपरमपावित्रम् योज्योतिषंवेत्तिनर ससम्यक्धर्मार्थ
मोक्षांल्लभतेयशश्चेति शिष्टास्तावच्छास्त्रारंभे सर्वारंभाहिदोषेणधूमेनाग्निरिवावृताइतिशास्त्रेणसर्वारंभेष्वंतरायप्राप्तौसत्यांधर्मेणपापमपनुदतीति
श्रुतिसिद्धप्रयोजनमास्थाय स्वस्तिनइंद्रोवृद्धश्रवाइतिलिंगाच्च ग्रंथस्यनिष्प्रत्यूहपरिसमाप्तयेमंगलमाचरति वस्मान्माध्यंदिनीयोब्राह्मणो
नारायणोनारायणाख्यानमतिज्योतिः शास्त्रसहितास्कंधचिकीर्षुर्विघ्नोपप्रत्यूहोपशांतये अभिमतदेवतानमस्कारलक्षणमंगलपूर्वकंग्रंथकरणप्रति
ज्ञांशार्दूलेनाह सिंदूरोल्लसितमिति सिंदूरेणउल्लसित शोभायमान इभेंद्रवक्त्रंगजाननं अंबांसरस्वतीम् श्रीविष्णुंप्रसिद्धम् विधविचरान् ब्रह्मान्
गुरून् निजगुरून् शास्त्रोपदेष्टॄन्प्रणम्य नमस्कृत्वा अहंनारायणोमुहूर्तमार्तंडनामग्रंथंतनोमि विस्तारयामि किमर्थम् सिद्ध्यैकार्यसाधनाय
पुन किमर्थम् विदुषमुदेपंडितहर्षाय हर्षकारणविशेषणद्वारेणाह किंलक्षणमुहूर्तमार्तंडम् लघुम् अतिशयेनाल्पम् अल्पेमन्दर्याभावशाकादि

शेषणद्वारापरिहरति पुनः किंलक्षणम् अर्थबहुलम् अल्पग्रंथेबव्हर्थेंदुर्बोधशंकापरिहरति पुनः किं॰ सुगमम् प्रकटार्थमिति ॥ १ ॥ अथनाना
मुहूर्तान्विवक्षुस्तावच्छुभेकर्मणित्याज्य त्रिभि॰ शार्दूलविक्रीडितैराह यामार्द्धमिति यामार्द्धादिकंशुभेशुभकर्मणिसत्यजेदित्यतिमश्लोकेनान्वयः
यामार्द्धकुलिकौवक्ष्यमाणलक्षणौ दिनर्द्धिर्नाम यत्रतिथिः सूर्योदयात् षष्ठिघटिकाभवति सैवान्यस्मिन्दिनेदृश्यतेसादिनर्द्धिः अवमः प्रसिद्धः

**सिंदूरोल्लसितामिभेंद्रवक्त्रमंबांश्रीविष्णुंवियातिचरान्गुरून्प्रणम्य ॥ बव्हर्थंविबुधमुदेलघुंमुहूर्तमार्तंडंसुगममहं**
**तनोमिसिद्ध्यै ॥ १ ॥ यामार्द्धकुलिकंदिनर्द्धिमवमंपूर्वदलंपारिघंविष्टिंवैधृतिपातसंक्रमगणंगडांतमेकार्गलम् ॥**
**कृष्णानंगचतुर्दिनंरविशशिक्रांत्योःसमत्वंखलांहोरांरात्रिदिनार्द्धकेक्षयदिनंपित्रोर्जनन्यार्तवम् ॥ २ ॥**

पारिघप्राग्दलपरिघयोगस्यपूर्वार्द्धम् विष्टिर्भद्रावक्ष्यमाणा वैधृतिर्योगः पातोव्यतीपातः संक्रमणसूर्यादीनाराशिसंक्रमणं सर्वेषाग्रहाणासंक्र
मणेत्याज्यघटिकाअग्रेवक्ष्यमाणाः गडांतात्रिविधवक्ष्यमाणम् एकार्गलोवक्ष्यमाणः कृष्णानंगचतुर्दिनकृष्णत्रयोदश्यादिप्रतिपदंतम् चद्रस्यक्षी
णत्वात् कैश्चिद्द्वादश्यादिसार्द्धदिनपंचकंत्यज्यते कृष्णेचात्यत्रिकंकैश्चित् तेषुमध्यमोऽयपक्षोऽत्रागीकृतः कृष्णनंगचतुर्दिनमिति रविशशि
क्रांत्योः समत्वसूर्यचंद्रमसोः क्रांतिसाम्यंगणितगम्यम् तथापितस्यावलोकनंकस्मिन्दिनेकर्तव्यमित्यग्रेवक्ष्यति खलांहोरां पापग्रहहोराम्

राशिदिनार्द्धंकेदिनार्द्धराज्यर्द्धंच उर्कप्रयांतरेमूर्तः कालोनिवसतिमक्षानिशायांचदिनदलेपस्मात् दशापूर्वंदशपरस्तस्माद्दर्भोनिचपलानीति क्षय दिनापित्रो मातापापितराचपितरौतयोः पित्रो क्षयदिनंश्राद्धदिनमित्यर्थः अनन्यार्त्तवमातु रजस्वलात्वम् ॥ २ ॥ मासाद्यमिति मासाद्यंजनि समयम् जनिरुत्पत्तिस्तत्रसंभवोयस्य पूर्वविधमासाद्यंमासप्रभृति जन्ममासजन्मतिथिजन्मनक्षत्रादि ग्रहणर्भं ग्रहणनक्षत्रम् चण्डायुधं वक्ष्य माणं दु क्षणोदुर्मुहूर्तो वक्ष्यमाण तम् ज्येष्ठ पूर्वभवस्यप्रथमजातापत्यस्यज्येष्ठमासम् पापयुगितेष्यर्क्षाणि पापाः पापग्रहाः वक्ष्यमाणास्ते

मासाद्यंजनिसंभवग्रहणभंचण्डायुधदुःक्षणज्येष्ठपूर्वभवस्यपापयुगितेष्यर्क्षाणिविद्धंचभम् ॥

ऊनाख्याधिकमासकौयुतिपुविव्याशूलगण्डातिगुप्यकार्याकरसर्तुपूर्वघटिकाभानांविषाख्याघटी ॥ ३ ॥

पामन्पतमेनपुक्तयुक्तम् इतंगतपश्यपुर स्थितम् एतानिऋक्षाणिनक्षत्राणिविद्धंभंचाविद्धनक्षत्रं वक्ष्यमाणलक्षणम् ऊनाख्याधिकमासकौक्षय मासाधिमासौवक्ष्यमाणलक्षणौ युतिपुविव्याशुलगंडातिपुप्य १का९र्था५क९रस६तु६ पूर्वघटिका विविष्कमः व्याघ्याघात शूल वक्ष्यगंडः प्रसिद्ध अतिअतिगंड एपुयोगेपुक्रमेणम्यकार्याकरसतुसंख्याकाः पूर्वघटिकाःप्रथमघटिकाःतथयाविष्कमेतिस्रःव्याघातेंकाः नवशूलेअर्थाःपंच पञ्चेअंका नवगंडेरसाःषट् अतिगंडेऋतवःषडिति भानांविषाख्याघटीःभानामश्विन्यादीनांनक्षत्राणांविषाख्याघटीर्वक्ष्यमाणलक्षणाः ॥ ३ ॥

लत्तेति लत्तापंचकपापवर्गएतत्सर्ववक्ष्यमाणं अशुभंचंद्रंवक्ष्यमाणगोचरप्रकरणेवेधं दशारिष्टकंजातकशास्त्रगम्यम् जन्मेशोज्यसितास्तं जन्मेशो राशिस्वामी ईज्योगुरुःसितःशुक्रःएषाअस्तगमन रविलुप्ताकिरणत्वं अंगशशिनोः क्रूरोद्भवाकर्तरीम् अगलग्नम्शशीचंद्रःतयोः क्रूरोद्भवांक्रूरग्रहज नितांकर्तरींवक्ष्यमाणलक्षणाम् रिष्टगोचरसभव गोचरेदुष्टग्रहाधिक्य गोचरवक्ष्यमाणम् ग्रहजनिप्रांतोद्भवसूतकम् ग्रहोग्रहणम् जानि जन्मप्रांतो मरणम् एभ्यउद्भूतसूतकम् ग्रहणसूतक जन्मसूतकं मृतसूतकमिति तेषुग्रहणसूतकं वक्ष्यमाणम् दुश्चिन्हानिकार्यारंभसमयेश्रुतदुर्वचनश्रवणादीनि

लत्तापंचकपापवर्गमशुभंचंद्रंदशारिष्टकंजन्मेशोज्यासितास्तमंगशशिनोःक्रूरोद्भवांकर्तरीम् ॥
रिष्टंगोचरसंभवंग्रहजनिप्रांतोद्भवंसूतकंदुश्चिन्हानिमनोविभंगमपिचव्याधिंशुभेसंत्यजेत् ॥ ४ ॥

मनोविभंगंअंतःकरणस्य अप्रवर्तनम्व्याधिर्ज्वरःतमपिरोगः पाप्माज्वरोव्याधिर्विकारोदुःखमामयइतिवागभट्टः ज्वरितस्यमंगलंनकुर्यादित्यर्थः तथाचोक्तज्योतिःप्रकाशे जन्माधिपविलग्नेशचंद्रभार्गवमंत्रिणां विरश्मित्वंजन्ममासोजन्मभंजन्मवासरः दुर्निमित्तमनोभंगःक्षयमासाधिमासकौ मृतजातकयोश्चैवसूतकग्रहणस्यच ज्वरोत्पत्तिरजोमातुःपित्रोःक्षयदिनतथा गंडांतत्रितयंकालः सधिर्भस्यतिथेस्तनोः क्रांतिपातोव्यतीपातोवैधृ ति परिघार्धक भानोःसंक्रांतिभोगश्चकुलिकश्चार्द्धयामकः क्रूरैर्मुक्तंयुतभोग्यसराहुशिखिधूमित धिष्ण्यंग्रहणगपापैर्विद्धसौम्यैश्चपादतः विष्टिःक्रू

रयुतंलग्नंलग्नतोरिपुमृत्युगः जन्मतोवुस्थितभंप्रोलग्नस्थानिधनोपग जन्मभाज्जन्मलग्नाच्चलग्नलग्नाशकाष्टमो पापयोर्मध्यगंलग्नंक्षीणेंदुःकुनवा शकः क्रूरवारेपापहोरादुष्टयोगाग्र्यहोग्रमाः तिथिरवृद्धिक्षयोमानांनाडिकाभिपर्संहिताः एतेदोषाःसामान्यातांशुभकर्मणिगर्हिता दशारिष्टोद्भवा भाग्येगोचरेत्मास्तथापरे लत्तैकार्गलचंडाकालवेलाश्चपंचक मृत्युयोगोपग्रहाद्याःस्वेस्वेदेशेतुनिंदिताइति ॥ ४ ॥ अथोपग्रहांतर्भविदोषांतरद्द चार्द्धेनाह नोकुर्यादिति रविभात् सूर्याधिष्ठितनक्षत्रात् अगेंद्रधृतिमितानियानिनक्षत्राणितेभ्योयुग्मेषु एतदुक्तंभवति सप्तमाष्टमयोःचतुर्दशपंचद

नोकुर्याद्रविभादगेंद्रधृतितोयुग्मेषुपंचाशयो स्वर्गात्पंचसुशोभनानितनुयादेषूग्रशस्त्रादिकम् ॥

मासर्क्षायनवारयोगतिथिभादीनांचसिद्धाभिधाज्ञातव्या पुनरुक्तिरस्तिकुहचित्सातत्स्मृतिप्राप्तये ॥ ५ ॥

शयोः अष्टादशैकोनविंशयोरिति तथापंचाशयोः रविनक्षत्रात् पंचमदशमयोः तथास्वर्गात्पंचसुएकविंशात्पंचसुनक्षत्रेषु २१ २२ २३ २४ २५ शोभनानिकर्माणिनोकुर्यात् एषुउग्रशस्त्रघातादिकंतनुयात् विस्तारयेत् कुर्यादित्यर्थःउक्तंच धिष्ण्यपंचमभेस्थितेश्चपलनंस्यात्सप्तमेसूर्यभात्स्थूल माष्टमभेशनिश्चदशमेकेतुस्तथाष्टादशे दंडःपंचदशोचतुर्दशाहप्रोक्तोनिपातोबुधैरुल्काकालविदांगणैर्निगदिताचैकोनविंशेर्कभादितिवज्रश्च [illegible] प्येपि [illegible] एतेष्विंदुसमेतेषुकुर्यात्कर्मनशोभनम् दहनास्वविधेःसाध्यंपसत्सिद्धि

मुपैतिचेति अन्यानपिदोषानग्रेप्रसंगतोवक्ष्यामि अथास्मिन्ग्रंथेमासादीनांसंज्ञालोकसिद्धाज्ञेयाइति तथापुनरुक्तिनिर्दूषणंवृत्तार्द्धेनाह मासत्वीय नेति मासाश्चैत्रादयः ऋतवोवसंतादयः अयनेदक्षिणोत्तरे वाराःसूर्यादयः योगाः विष्कंभादयः तिथयः प्रतिपदादयः भान्याश्विन्यादीनि इत्या दीनाकरणराशिभावादीनासिद्धाभिधाः शास्त्रांतरसिद्धाः संज्ञा ज्ञातव्याः तथाइहास्मिन्ग्रंथेकुहचित् कुत्रचित् पुनरुक्तिर्वर्ततेसातस्यदूरातारितस्य स्मृतिप्राप्तये स्मरणायेतिनदोषः इतिस्वोक्तमुहूर्तमार्तंडटीकायामार्तंडवल्लभायात्याज्यप्रकरणम् ॥ १ ॥ अथसाधारणनक्षत्रप्रकरणंविवक्षुरादौन

## इतिश्रीमदनंताख्यचातुर्मास्ययाजिपुत्रनारायणविरचितेमुहूर्तमार्तंडेत्याज्यप्रकरणम् ॥ १ ॥

**भेशादस्त्रयमाग्निकेंदुगिरिशाःप्रोक्ताअदित्यंगिराःसर्पाःकव्यभुजोभगोर्यमरविस्त्वष्टासमीरःक्रमात् ॥**

क्षत्रदेवताः एत्तैनैकेनाह अस्मिन्प्रकरणेसर्वाणिशार्दूलविक्रीडितानि भेशाइति अश्विन्याः सकाशात्क्रमेणभेशाबुधैः प्रोक्ताइत्यन्वयः भानांनक्ष त्राणामीशाः स्वामिनः दस्रौ अश्विन्याः यमोभरण्याः अग्नि कृत्तिकायाः कोब्रह्मारोहिण्याः इंदुर्मृगस्यगिरिशोमहादेवः आर्द्रायाः अदितिः पुनर्वसोः अंगिराः गुरुः पुष्यस्यपन्नगाः सर्पाः आश्लेषायाः कव्यभुजः पितरः मघायाः भगःपूर्वाफाल्गुन्याः अर्यमाउत्तराफाल्गुन्याः रविर्ह स्तस्य त्वष्टाचित्रायाः समीरणोवायुःस्वात्याः इंद्राग्निदेवताद्वयं विशाखायाः मित्रोअनुराधायाः इंद्रोज्येष्ठायाः निर्ऋतिः राक्षसोमूलस्यनिरंज

ऽपूर्वाषाढायाः विश्वउत्तराषाढायाः विधिभमाभिजित वैकुंठोविष्णुः श्रवणस्यवसवोधनिष्ठाया पाशिवरुणः शततारकायाः अजैकचरणःपूर्वा भाद्रपदाया अहिर्बुध्न्यउत्तराभाद्रपदाया पूषारेवत्या देवताप्रयोजनंनक्षत्रज्ञानार्थंशांतिकादौयजनार्थंच ॥ १ ॥ अथनक्षत्राणांस्थिरचरादि संज्ञामाह मार्क्षरोहिणी किंलक्षणम् भार्क्षमुत्तरयुक् तिसृणामुत्तराणांसमाहारस्त्र्युत्तरम् तेनयुक्तयुक्तान् ध्रुवसंस्थिरमिति इत्यभिधानंमुनीभिःस्मृत

श्रुत्राग्निस्त्वथमित्रइद्रनिऋतिनीरंचविश्वेविधिर्वैकुंठोवसुपाश्यजैकचरणाहिर्बुध्न्यपूषाभिधा ॥ १ ॥

त्राह्मंत्र्युत्तरयुक्ध्रुवस्थिरमथोपूर्वामघायाम्यमुग्रंक्रूरोयंश्रवणत्रयादितियुतास्वातीचरास्याच्चला ॥

दस्त्रार्काभिजिदीज्यमलघुतथाक्षिप्रंचमैत्रांतिमेंदुत्वाष्ट्रंमृदुमैत्रमग्निभविशोमिश्रंचसाधारणे ॥ २ ॥

मित्यन्वयः अथोपूर्वामघायाम्यमंपूर्वात्रयमघाभरणीतिपंचकम् क्रूरोमंक्रूरउग्रंचोक्तम् श्रवणत्रयादितियुतास्वाती श्रवणधनिष्ठाशततारका अदिति पुनर्वसुः एभिः सहितास्वाती चरास्याच्चलाचोक्ता श्रवणधनिष्ठापंचकंचरास्यंचलंप्रोक्तमित्यर्थः दस्त्रार्काभिजिदीज्यमं दस्त्रो अ श्विनी अर्कोहस्तः अभिजित्स्वमाणलक्षणः इज्योगुरुस्तस्यभंपुष्यइतिचतुष्टयं लघुतथाक्षिप्रंप्रोक्तं मैत्रांतिमेंदुत्वाष्ट्रम् मैत्रमनुराधा अंतिमंरे वती इंदुमृगः त्वाष्ट्रं चित्रा एतच्चतुष्टयं मृदुतथा मैत्रंप्रोक्तं अग्निभविशो अग्निर्भंकृत्तिका विशाखा एते द्वेमिश्रे साधारणेप्रोक्ते ॥ २ ॥

इदंतीक्ष्णंप्रोक्तं इहएषुध्रुवादि संज्ञेषु नक्षत्रेषु संज्ञातुल्यं कार्यं सुधियः
मूलप्रसिद्ध अहिराश्लेषा इंद्रोज्येष्ठा शिवः आर्द्रा एतच्चतुष्टयं दारुणं अदः
पंडिताःआचरंति किमर्थंससिद्धये एतदुक्तभवति स्थिरनक्षत्रेषुस्थिरंस्तंभप्रतिष्ठादिकम् चरेचरमित्यादिकूर्वंतीतिस्पष्टम् अत्रसमानार्थसंज्ञाह
यकरणंकवित्वबंधनार्थं अत्रप्रसगेनसूर्यादीनामपिस्थिरादिसंज्ञासौम्यपापत्वंच वृत्तार्द्धेनाह सूर्याद्याइत्यादिसूर्यः स्थिरः चंद्रश्चचलः भौमः उग्रः

मूलाहींद्रशिवंचदारुणमदस्तीक्ष्णंमुनींद्रैःस्मृतंसंज्ञातुल्यमिहाचरंतिसुधियःकार्यंहिसंसिद्धये ॥ सूर्याद्याःस्थिर
चंचलोग्रमिलिताःक्षिप्रोमृदुर्दारुणःक्षीणेंद्वर्कयमारराहुशिखिनःपापाबुधस्तैर्युतः ॥ ३ ॥ अन्हःस्युःशिवसार्पमि
त्रापितरोवस्वंबुविश्वेभिजित्केंद्रेंद्राग्निनिशाचराअपिजलाधीशोर्यमाख्योभगः ॥

बुधः मिलितोमिश्रः गुरुः क्षिप्रः शुक्रोमृदुःशनिर्दारुणः अथपापसौम्यान् ग्रहानाह क्षीणेति क्षीणेंदुःकृष्णाष्टम्यूर्ध्वंप्रतिपत्पर्यंतंक्षीणः अर्कः सूर्यः
यमः शनिः आरोभौमः राहुः प्रसिद्धःशिखीकेतुःएतेक्षीणेंद्वादयः पाप : क्रूराः तैः पापैर्युतोबुधः पापःस्यात् उक्तंचजातकोत्तमे क्षीणेंद्वार्कार्किभौ
माः स्युःपापाःसौम्योपितद्युतः राहुकेतूपापतरौपापः पापयुतस्तथेति अर्थादन्येसौम्याःएषाप्रयोजनम् क्रूरसौम्यकर्मसाधने ॥ ३ ॥ अथप्रसंगेन
नक्षत्रसमाननाथान् दिनरात्रिमुहूर्त्तान्नक्षत्रोक्तकार्यसाधकान्वृत्तेनैकेनाह एतेन्हो दिवसस्यतिथि १५ लवाः पंचदशांशाः मुहूर्त्ताः शिवादयः

टपुनर्वसाद्या मिश्वेउत्तराषाढाया: विधिमघाभिजितः वैकुंठोविष्णु श्रवणस्यवसवोधनिष्ठाया पाशिवरुण शततारकाया: अजैकचरण:पूर्वा भाद्रपदाया अहिर्बुध्न्यउत्तराभाद्रपदाया पूषारेवत्या: देवताप्रयोजननक्षत्रज्ञानार्थशांतिकादौपजनार्थंच ॥ १ ॥ अथनक्षत्राणांस्थिरचरादि सज्ञामाह भाध्रोहिणी कृत्तिकषणम् माक्षम्युत्तरयुक् तिसृणामुत्तराणांसमाहारस्युत्तरम् तेनयुक्युक्तान् ध्रुवस्थिरमिति इयभिधानमुनींद्रैःस्मृत

इत्राग्नित्वयामित्रइंद्रनिर्ऋतिनीरचविश्वेविधिर्वैकुंठोवसुपाश्यजैकचरणाहिर्बुध्न्यपूषाभिधा ॥ १ ॥
ब्राह्मत्र्युत्तरयुक्ध्रुवस्थिरमथोपूर्वामघायाम्यभंक्रूरोग्रंश्रवणत्रयादितियुतास्वातीचरास्याचला ॥
दस्त्रार्काभिजिदीज्यभंलघुतयाक्षिप्रंचमैत्रांतिमेंदुत्वाष्ट्रंमृदुमैत्रमग्निभविशेमिश्रेचसाधारणे ॥ २ ॥

मित्यन्वय अथोपूर्वामघायाम्यभंपूर्वात्रयमघाभरणीविपंचकम् क्रूरोग्रंक्रूरंउग्रंचोक्तम् श्रवणत्रयादितियुतास्वाती श्रवणधनिष्ठाशततारका: अदिति पुनर्वसु एभि: सहितास्वाती चराख्याचलाचोक्ता श्रवणत्रयादिपंचकचराख्यचलप्रोक्तमित्यर्थ दस्त्रार्काभिजिदीज्यभं दस्त्रो अश्विनी अर्कोहस्त: अभिजिद्वक्ष्यमाणलक्षण इज्योगुरुस्तस्यभंपुष्यइतिचतुष्टय लघुतयाक्षिप्रंप्रोक्तं मैत्रांतिमेंदुत्वाष्ट्रम् मैत्रमनुराधा अंतिमेरेवती इंदुभंमृग त्वाष्ट्रं चित्रा एतच्चतुष्टयं मृदुतया मैत्रप्रोक्त अग्निभविशे अग्निभंकृत्तिका विशाविशाखा एते द्वेमिश्रे साधारणेप्रोक्त ॥ २ ॥

तत्रादौमासफलमाह आद्यर्तौप्रथमर्तौपौषशुक्रोर्जमधुशुचिनभस्याः संतोनस्युरित्यन्वयः अर्थाद्विभक्तिपरिणामः पौषः प्रसिद्धः शुक्रोज्येष्ठ.ऊर्जः कार्तिकः मधुश्चैत्रः शुचिराषाढः नभस्योभाद्रपदः एतेषण्मासाः नशुभाइत्यर्थः अर्थादन्येशुभाःतदुक्तज्योतिर्निबंधे प्रथमर्तौमघौनारीविधवाभवतिध्रुवम् वैशाखेधनपुत्राढ्याज्येष्ठेरोगान्विताभवेत् आषाढेचमृतापत्याश्रावणेचधनान्विता भाद्रपदेदुर्भगाचआश्विनेचतपस्विनी ऊर्जेल्पायुष्मतीनारीमार्गशीर्षेबहुप्रजा पुष्येतुपुंश्चलीनारीमाघेपुत्रसुखान्विता फाल्गुनेश्रीमतीसाध्वीक्रमान्मासफलंस्मृतमिति योगफलमाहकुयुगीति कुयो

आद्यर्तौपोषशुक्रोर्जमधुशुचिनभस्याःकुयुक्पापवारारिक्तामार्काष्टषष्ठ्याःपरगृहकुपदेरात्रिसंध्यापराण्हाः ॥

गोविष्कभादिकः योगेषुनवयोगाः दुष्टाः सति विष्कंभातिगंडव्याघातवज्रव्यतीपातपरिघवैधृतयः एतेयोगानशुभाइत्यर्थः अर्थादन्येशुभाः तदुक्तं आद्यर्तौदुर्भगानारीविष्कंभेचेद्रजस्वला वंध्याचैवातिगंडेचशूलेशूलवतीभवेत् गंडेचपुंश्चलीनारीव्याघातेचात्मघातिनी वज्रेचस्वैरिणीप्रोक्तापातेचपतिघातिनी परिघेमृतवंध्याचवैधृतौपतिमारिणी शेषाः शुभावहायोगायथानामफलप्रदाइति वारफलमाह पापवाराइति क्षीणेंद्वर्कयमाराः पापा॰ ते ।वारानशुभाःअर्थादन्येशुभाः उक्तचकारिकायाम् आदित्येविधवानारीसौमेचैवमृतप्रजा अंगारेस्वस्वहंत्रीचबुधेकन्याप्रसूर्भवेत् पुत्रिणीगुरुवारेचकन्यापुत्रवतीभृगौ शनौतुपुंश्चलीनारीप्रथमर्तौविदुर्बुधाइति तथाचनारदः रोगीपतिव्रतादुःखीपुत्रिणीभोगभागिनी पतिप्रियाक्लेशभा

तत्राद्यौमासफलमाह आद्यर्तौप्रथमर्तौपौषशुक्रोर्जमधुशुचिनभस्याः संतोनस्युरित्यन्वयः अर्थाद्विभक्तिपरिणामः पौषः प्रसिद्धः शुक्रोज्येष्ठ.ऊर्जः कार्तिकः मधुश्चैत्रः शुचिराषाढः नभस्योभाद्रपदः एतेषण्मासाः नशुभाइत्यर्थः अर्थादन्येशुभाःतदुक्तज्योतिर्निबंधे प्रथमर्तौमघौनारीविधवाभव तिध्रुवम् वैशाखेधनपुत्राढ्याज्येष्ठेरोगान्विताभवेत् आषाढेचमृतापत्याश्रावणेचधनान्विता भाद्रपदेदुर्भगाचआश्विनेचतपस्विनी ऊर्जेल्पायुष्म तीनारीमार्गशीर्षेबहुप्रजा पुष्येतुपुंश्चलीनारीमाघेपुत्रसुखान्विता फाल्गुनेश्रीमती।साध्वीक्रमान्मासफलस्मृतामिति योगफलमाहकुयुगिति कुयो

आद्यर्तौपोषशुक्रोर्जमधुशुचिनभस्याःकुयुक्पापवारारिक्तामार्काष्टषष्ठ्याःपरगृहकुपदेरात्रिसंध्यापराण्हाः ॥

गोविष्कभादिकः योगेषुनवयोगाः दुष्टाः संति विष्कंभातिगंडव्याघातवज्रव्यतीपातपरिघवैधृतयः एतेयोगानशुभाइत्यर्थः अर्थादन्येशुभाः तदुक्तं आद्यर्तौदुर्भगानारीविष्कंभेचेद्रजस्वला वंध्याचैवातिगंडेचशूलेशूलवतीभवेत् गंडेचपुंश्चलीनारीव्याघातेचात्मघातिनी वज्रेचस्वैरिणीप्रोक्तापा तेचपतिघातिनी परिघेमृतवध्याचवैधृतौपतिमारिणी शेषाः शुभावहायोगायथानामफलप्रदाइति वारफलमाह पापवाराइति क्षीणेंदुर्कयमाराः पापाः ते वारानशुभाःअर्थादन्येशुभाः उक्तंचकारिकायाम् आदित्येविधवानारीसौमेचैवमृतप्रजा अंगारेस्वस्वहंत्रीचबुधेकन्याप्रसूर्भवेत् पुत्रि णीगुरुवारेचकन्यापुत्रवतीभृगौ शनौतुपुंश्चलीनारीप्रथमर्तौविदुर्बुधाइति तथाचनारदः रोगीपतिव्रतादुःखीपुत्रिणीभोगभागिनी पतिप्रियाक्लेशभा

त्रश्लोकेबहूक्तं अत्रकथंपरगृहकुपदइत्येवोक्तं सत्यंयत्स्थानद्वयमुक्तंतस्मिन्नेवसर्वंश्लोकोक्तमधितिष्ठति तद्यथा देवस्थानान्यवेश्मचांडालवेश्मे तिपदत्रयम् परगृहइत्येतस्मिन्पदेधितिष्ठति अन्यच्छ्लोकोक्तनकुपदेवर्ततेननुमार्गः कथंकुपदोस्ति सतुकुत्सितोनभवति अस्तिमार्गेपिदुष्टत्वंसर्वजनसंचाराद्धर्मशास्त्रप्रसिद्ध तर्हिपूर्वश्लोकोक्तंबहुभाषण व्यर्थस्यात् मैवंतदुक्तंबहुभाषणंत्वनधिकाधिकदोषविवक्षयोक्तमितिनदोषःवेलाफलमाह रात्रिसंध्यापराण्हइतिरात्रिःप्रसिद्धा संध्येद्वे अपराण्हस्त्रेधाविभक्तस्याऽन्हतृतीयोभागः एतेचत्वारः कालानशुभाः अर्थादन्यौपूर्वाण्हमध्यान्हौ शुभौ उक्तंच पुत्रिणीसुभगापुण्यापुर्वाण्हेयारजस्वला मध्यान्हेतुशुभप्राप्तिःस्वैरिणीचापराण्हके संध्ययोरुभयोर्वेश्यानिशायांविधवातथेति नक्षत्रफलमाह मिश्रोग्रामूलतीक्ष्णमिति मिश्रेकृत्तिकाविशाखेउग्राणिपूर्वात्रयभरणीमघाः अमूलतीक्ष्णानिमूलरहिततीक्ष्णानि आश्लेषाज्येष्ठार्द्रा इत्येतन्नक्षत्रदशकनशुभम् अर्थादन्यानिशुभानि तदुक्तंनारदीयसंहितायाम् श्रीयुतासुभगापुत्रवतीसौख्यान्वितास्थिरा कुलाधिकामानवती चाश्विन्यांप्रथमार्तवा १ दुःशीलास्वैरिणीस्वस्यगर्भपातनतत्परा परप्रेष्याकाकवंध्याभरण्यांप्रथमार्तवा २ अनर्थापुंश्चलीवंध्यागर्भपातनतत्परा प्रेष्यामृतप्रजावापिवन्हिभेप्र० ३ सुशीलासुप्रजामान्यापतिभक्तादृढव्रता गृहार्चनरतानित्यधातृभेप्र० ४गुणान्विताधर्मरतानारीसर्वसहासती पतिप्रियासुताढ्याचचंद्रभेप्र० ५कुलटादुर्भगाकष्टामृतपुत्रास्खलाजडा दुष्टाव्रतपरिभ्रष्टारौद्रभेप्र० ६ पतिभक्तापुत्रवतीवरसंतानमोदिनी कुलाचारानुरक्ताढ्यादितिभेप्र० ७ पतिप्रियापुत्रवतीनानाभोगवतीशुभा स्वकर्मनिरतादक्षातिष्यभेप्र० ८ परभर्तृरताप्रेष्याकोपिनीनिर्घृणालसा मृषावा

यिकास्त्रमिति अरुणादन्यत् अनरुणं अनरुणच अल्पंच अधिकंच अनरुणाल्पाधिकं तश्चतत् अस्त्रंच अनरुणाल्पाधिकास्त्रंनसत्स्यात् अनरुण नामयत्सुरंगं आरक्तंनभवाति अस्त्ररक्त अन्यत्सुगम अर्थादन्यच्छुभं उक्तंच प्रथमर्तौफलस्त्रीणामुच्यतेरजसोधुना सुभगापुत्रसयुक्ताशुक्लवर्णेत थार्तवे शशशोणितसकाशेयद्वाऽलक्तकसंनिभे पुत्रकन्याप्रसूतिःस्यान्निलेतुस्यान्मृतप्रजा कर्बुरेम्रियतेसाचपिंगटेचमृतप्रजा कृष्णेतुविधवानारीर जस्येवविनिर्दिशेत् शोणितेबिंदुमात्रेतुस्वैरिणीचाल्पशोणिता वरामध्यस्त्रवास्यात्तुदुर्भगाबहुशोणितेति ग्रथांतरेप्युक्तं रक्तेरक्तेभवेत्पुत्रःकृष्णेच मृतपुत्रका पिच्छलाभेभवेद्वंध्याकाकवंध्याचपांडुरेति पीतेचस्वैरिणीप्रोक्तासुभगागुजवर्णके सिंदूराभेभवेत्कन्यारजःशोणितलक्षणमिति कर णफलमाह गराष्टेति गरात् अष्टगराष्टगराद्यष्टकरणानिबवपर्यंतानिनसाति नशुभानिस्युः अर्थादन्यानिशुभानि ऊक्तंच बवेपुष्पवतीनारीवंध्या वाविधवाभवेत् बालवेपुत्रिणीनारीकौलवेप्रमदाभवेत् तैतिलेसन्मतवतीगरेनारीविनश्यति नष्टप्रजावणिक्सञ्ज्ञेविष्टद्यावध्याधनोज्झिता शकुनौ चचतुष्पादेनारीवैधव्यमाप्नुयात् नागेनरमतेरामाकिंस्तुघ्नेविधवाभवेति अथोत्पातफलम् उत्पातस्त्रिविधः सत्नस्यात् तथाचनारदः संध्यासूप्लवेविष्टद्यामशुभप्रथमार्तवमिति अथलग्नफलमाह पापस्थलग्नमिति पापग्रहस्यलग्नंनसत्स्यात् क्षीर्णेंदर्कयमाराः पापास्तेषामन्यतमस्यल ग्नमित्यर्थः पापग्रहस्यमेषसिंहवृश्चिकमकरकुंभाः एतानिलग्नानिनशुभानित्यर्थःअर्थादन्यानिशुभानि कर्कलग्नेशुक्लपक्षेशुभम् कृष्णपक्षेअशुभम् स्वामिवशात् लग्नस्वामिनोवक्ष्यमाणाः उक्तंच आत्ममीभ्रूणहामेषेवृषेपुत्रवतीभवेत् द्वंद्वेकन्याप्रसूर्नारीमृतापत्याचकर्किणि सिंहेवैधव्यमा

प्रोतिरम्पायाम्वीप्रसूर्भवेत् तुलायांवद्दुपुमाख्यादुष्टकमरतालिनि चापेपुभवनाख्यास्यान्मकरेवुशिनीभवेत् सक्तप्रजावतीकुंभेमीनेचाल्पप्रजा भवेत् नारदोपि कुटीरवपथापात्यनृपुकन्यागुलायना गवायःशुभवातयानारीणांप्रथमार्तवक्षति अत्रापिकफलप्रस्पद्दथचंद्रस्यसौम्यत्वपाप त्वपशाद्दयवस्थात्तेया अथवस्त्रफलमाह अरुणजरत्नीलधिभावरमिति नसस्त्यात् अरुणमारक्तं जरज्जीर्णं नीलप्रसिद्धम् चिभनानावर्णैरजि

प्रायश्चंद्रस्यजात्याष्टमरिपुतनुगभाशकौमूढनाथोक्रूरैद्वासोखलाशमृतिगतखचरंमृत्युतस्पौतनुस्थौ ॥
सौम्या केंद्रत्रिकोणेष्वरिभवसहजेष्वन्यखेटा प्रशस्तःसर्वत्रैतत्प्रयोज्यंप्रकरणपठितांस्ताद्विशेषावि
दित्वा ॥ २ ॥ इतिसाधारणलग्नबलप्रकरणम् ॥ ३ ॥

तम् पवयिपमवरनसतस्यात् नशुभंस्यादित्यर्थः अर्थात् रक्तंशुभंपीतंवस्त्रशुभम् उक्तंच सुभगाश्वेतवस्त्राचरोगिणीरक्तवाससा नीलांबरधरानारी विधवाप्रथमार्तवा भोगिनीपीतवस्त्राचदद्रवस्त्रापतिमृता दुर्भगाजीर्णवस्त्राचसुभगाचारुवासिनी अथानुक्तमपिग्राह्यं प्रकरणोक्तमन्यदुर्वुद्धिं चारणीयम् अथारिष्टुक्तनिषिद्धकालेरजोदर्शनेसति अक्षततिलघृतैर्देव्याइष्टययायजनंस्यात् केनदेव्यागायत्रीमंत्रेणतस्यानुपायानावसत तिलघृतानामष्टोत्तरशतहोम यथाशक्तिस्वर्णगोभूतिलदानंसकार्यम् ॥ १ ॥ इतिस्त्रोक्तं प्रथमार्तवप्रकरणम् ॥ २ ॥ ॥

अथसाधारणलग्नबलंस्रग्धरावृत्तेनाह प्रायइति इहवक्ष्यमाणेगर्भाधानादिकृत्येप्रायोबाहुल्येनचंद्रंअंत्याष्टमरिपुतनुगम् त्यजजहीति अंत्यंद्वादशं अष्टमप्रसिद्धंरिपुःषष्ठतनुर्लग्नं एतान्प्रतिगतचद्रंत्यजेति तथाभांशकौत्यज किंलक्षणौभांशकौ मूढनाथौमूढःनाथोययोस्तौ तथाअस्तगतस्यलग्ननवांशावित्यर्थः पुनःकिंलक्षणौ क्रूरेद्धातौक्रूरग्रहचंद्राणामन्यतमेन युक्तौ तथाखलांशंत्यजयत्रकुत्रापिलग्नेपापग्रहनवांशंत्यज तथामृतिगतखचरंत्यज लग्नादष्टमग्रहंत्यजेदित्यर्थः तथामृत्युतत्पौतनुस्थौत्यज मृत्युर्जन्मराशिजन्मलग्नाभ्यामष्टमंत्याज्यम् तत्पस्तत्पतिस्त्याज्यः

स्वस्त्रींप्राङ्ङिट्चतुष्कासमदिनविवरश्राद्धतत्प्राग्दिनानित्यक्त्वामूलंमघांत्येवसुकलिजानिभाहानिपर्वाणिचतौ ॥
याहीज्यार्केंदुलग्नैर्विषमभलवगैरुद्बलैर्भोसुतार्थिन्व्यस्तैरेतैरिहैवायुगहानिमुदितःकन्यकेच्छोसुचंद्रे ॥ १ ॥

एतौतनुस्थौत्यजेदित्यर्थः लग्नगोचरमाह सौम्याइति सौम्यः सौम्यग्रहाःकेंद्राणिलग्नचतुर्थसप्तमदशमानित्रिकोणेनवपचमे एतेषुकेंद्रत्रिकोणेषु सौम्यग्रहाः प्रशस्ताः अरिभवसहजेषु अन्यखेटाः अरिःषष्ठंभवः एकादशं सहजंतृतीयम् एषुस्थानेषु अन्येखेटाः सौम्येभ्योऽन्येपापग्रहाप्रशस्ताःस्युः सर्वत्रैतत्प्रयोज्य एतत् श्लोकोक्तसर्वत्रगर्भाधानादिकृत्येप्रयोज्यम् साधारणत्वात् किंकृत्वा प्रकरणपठितांस्तद्विशेषान्विदित्वापृथक्कृत्येप्रकरणपठितविशेषान्ज्ञात्वा ॥ २ ॥ इतिसाधारणलग्नबलप्रकरणम् ॥ २ ॥ अथगर्भाधानंस्रग्धरावृत्तेनाह भोसुतार्थिन् ऋतौमुदितःसन्स्व

श्रीमतियाद्वि गच्छइत्कन्वयः सुर्तमर्थयतेऽसौसुतार्थीतस्यसवोधनंभोसुतार्थिन् ऋत्वीरजोदर्शनादारभ्यपोडशराभय ऋतुःअस्मिन्नृतुसर्पः सजा
तोपस्यसमुदितः पूर्वमिथ सन्नस्वर्गीभविगच्छेत्यर्थः यतोभवीगर्भधारणकरोति अमकीरपिदर्यितामाभ्या सयाषमनु ऋतुःस्वाभाविकः स्त्रीणां
रामय पोडशरात्राइति किंतुस्वाभाविदच्चतुष्कासमादिनाविवराशाद्यतमाम्दिनानिमस्का प्राणांनिशाचतुष्कमाद्विदंचतुष्कंपूर्वराभिचतुष्ठयअस
मदिनंविषमादेनविषरात्रि दिनरात्रितिथिमादीनांसंचयः श्राद्धस्यापमेः श्राद्धदिनंसत्प्राम्दिनंतस्यश्राद्धस्यपूर्वदिनं एतानित्यरकेत्यर्थः एषमूलस्य
स्का तयानृक्षमघारव्येत्यस्का मूलमघेप्रसिद्धे अंत्यरेवती पुतानित्यस्केत्यर्थः तयाषष्ठुकडिजनिमाहानित्यस्का चतुरष्टमी कडिचतुर्दशी जनिम
जन्मनक्षत्र अहोविवाप्रयानित्यस्केत्यर्थः तयापर्वाणिवस्यस्कापर्वाणिवर्तापौर्णिमाव्यतीपातवैधृतिसंक्रांतीमहापातादीनित्यस्कास्त्रिपंप्रतिग
च्छेत्यर्थः तयाचनारवः रजोदर्शनतोऽस्पृश्यानाद्यौदिनचतुष्टयम् ततश्चशुद्धाक्रियास्वेता सर्ववर्णेष्वयंविधिरितिवसिष्ठाउपप्लवेवैधृतिपातयोश्चवि
प्र्यापिवापारिमपूर्वभागे सप्पास्तुसर्वास्वपिमातृपित्रोर्मृतेन्हिपत्नीगमनंविवर्ज्यम् दिनेषुयुग्मेषुचवक्ष्यमाणयोगेभुतार्थीस्वमतीमपेयात् विने
युग्मेषुचकन्यकार्थीहित्वाचगंडास्तिथिलमभागात् ज्योतिषार्केचयोयुग्मनिशास्वर्गीगच्छेत्पुत्रायसंद्विषौ मधामूलास्यपक्षांतमूतदर्शाष्टमी
त्यजेदितिकैःयुग्मर्तेतुलमः विषमलग्नेः इत्योगुरु शकःप्रसिद्धःयुग्मंप्राललांप्रसिद्धम् एवंविषमलग्नेः संराशिः लग्नानमेशः विषमराशि
विषमनवांशास्थितोरस्यर्थः नकेवलं विषमलग्नेअपितुउप्ले उपउपस्कंदबलेनपावानितयाते मथकन्याकामिनोविशेषमाह मोकन्यकेच्छो

इहैव अनतरोक्तलक्षणेकाले अयुगहनिविषमेदिनेमुदितः सन्ल्लोंप्रतियाहि केः एतैर्व्यस्तैः एतैः ईज्याकेंदुलग्नैःव्यस्तैरितिसमभलवगेः समराशिस
सुचद्रेशोभने कस्मिन्सति पुंजन्मप्रवदेत्समांशगतैर्युग्मेषुतैर्योषितइति बलिभिर्लग्नार्कगुर्विंदुभिः ओजर्क्षेपुरुषांशकेषु
माशस्थैः तथाचवृहज्जातके अथपुसवनसीमतोन्नयनेस्त्रग्धरयाह ॥ १ ॥ पूर्ववल्लग्नबलम् अनन्यगतिकविनासर्वत्रयोज्यम् सुचद्रेइति
चंद्रेसति गोचरेणचद्रबलेसतीत्यर्थः एषामन्यतमेपुन प्रोष्टपात्पूर्वाभाद्रपदा अभिजित्प्रोष्ठपाचैवअनुराधाश्वियुक्तथेति पुनर्वसुः पुष्योहस्तः
पुभेति पुमेपुन्नक्षत्राणिचैतानि

पुंभेऽर्केज्यारवारेविमिथुनविषमांगांशयोःपुंसवंस्यात्सीमंताख्यंचसत्सुव्ययसुतग्रहयोःपर्वरिक्तोनतिथ्याम् ॥
मासेद्वित्रिप्रसंख्येप्रथमकमपरंतुर्यषष्ठाष्टमेषुप्रोक्तंपुंगर्भलग्नग्रहबलमनयोर्योज्यमाद्यश्चपक्षः ॥ २ ॥

क्षत्रे अर्केज्यारवारे रविगुरुभौमवारे विमिथुनविषमांगांशयोः अगच अंशश्च अंगांशौ विगतमिथुनयाभ्यातौविमिथुनौतौचतौ अंगांशौचतथात
योः मिथुनरहितेविषमलग्नेविषमनवांशेइत्यर्थःपुंसवंपुसवनंसीमताख्यंचसीमतोन्नयनामिति सत्स्यात् नामैकदेशग्रहणेनामग्रहण कयोः सतोः
सुव्ययसुतग्रहयोः सतोः पापग्रहरहितयोः व्ययसुतभवनयोः सतोरित्यर्थः पर्वरिक्तोनतिथ्याम् पूर्णिमामारिक्तातिथिरहिततिथ्यां मासेद्वित्रिप्रस
ख्ये प्रथमकपाठोक्तयाप्रथमकपुंसवनंगर्भाधानात्द्वित्रिप्रसख्येमासिद्वितीये तृतीयेवामासिसत्स्यात् अपरंसीमंतोन्नयनम् तुर्यषष्ठाष्टमेषु गर्भा

चतुर्थपष्ठाष्टमेषुमासेषुसस्यात् यत्पुंगर्भायलग्नबलमुक्तम् कन्यार्केतुलाग्नेरित्यादिकवदनयोः पुंसवनसीमंतोन्नयनयोर्योग्यम् आपः पसः शुक्लप
समयोज्यः नक्षत्राः अथगर्भोपघाशनातेपुगुरुशुक्रमोऽयादिकेनचिंत्यमिसप्रमेवघाति लग्नबलपूर्ववत् जातूकर्ण्य द्वितीयेवातृतीयेवामासि
पुंसवनंभवेत् व्यक्तेगर्भेभवेत्कार्यंसीमंतेनसहाथवा नारसिंहः रिक्तांचपर्वनवमीस्यक्त्वापुंसवनेशुभा एतच्छाते सीमंतोन्नयनषुभेस्तुाहिनगौपुन्नामधि
ष्ण्येस्थितेकुर्यात्पुंसवनंच सूर्येदिवसेभौमस्यजीवस्यवेत्यादि बृहस्पतिः कुलीरमिथुनंकन्याश्चित्यादोषाःशुभावहाः इति नारदः चतुर्थेमासिषष्ठेवाप्य
ष्टमेवातदीश्वरे बलोपपन्नेदंपत्योश्चंद्रताराबलान्विते अरिक्तापर्वदिवसेकुजजीवार्कवासरे तीक्ष्णमिश्रोग्रवर्ज्येषुपुंलग्नेषुनवांशके शुद्धेऽष्टमेजन्मल
ग्नात्तयोर्लग्नेननैधने शुभग्रहपुवेरष्टपापखेटापुतेक्षते पंचेषुकेचतुर्भिर्वाग्रहैःकेंद्रीव्यपूर्वकैः स्त्रीणांतुप्रथमेगर्भेसीमंतोन्नयनंशुभम् शुभग्रहेषुधीधर्म
केंद्रेष्वारिभवषिषु पापेषुतत्सुषट्त्रैत्यनिधनायरिवर्जिते कृतप्राणामेकस्मल्लग्नावक्ष्यास्मजाग्रुगः सीमंतिनीवातगर्भंसलीहवतिनसंशयइति ॥ २ ॥
अथजातकर्मविधिःस्मृत्यर्थसारेतेनाह सूतौप्रसूतौजातायांजातंजातकर्मविदध्यात् कुर्याच्च अथकदाचित् सूतकमध्येप्रसूतौजातायांतस्यांस्मार्तकर्म
परित्यागोराहोरन्यभसूतकइति शास्त्रेणजातकर्मणावराधेप्राप्तेसत्यपवादमाह जनिमरणाशौचकेपि अपमर्थः कदाचिज्जातकमृतसूतकयोः प्रसूति
र्भवतितदा जातकर्मविषयेसूतकांतरदोषोनास्तीतिभावः मृतकांतरेसत्यपिजातेपुत्रेपितासचैलस्नानंकुर्यात् इतिस्यस्वगृह्योक्तकर्मकुर्यादित्यर्थस्त
तःपूर्वाशौचेनैवास्यशुद्धिः पितुरितिकर्तुरुपलक्षणं वाचवतपूर्वावाषासेवाएतस्याविवाहिसादिभिर्नक्षत्रैः कुर्यात्ताविप्राणि भभिनीकृत्साभिभिरपु

ष्याःब्राह्मंरोहिणी उत्तरास्तिस्रः चराणिश्रवणत्रयंपुनर्वसुस्वात्यः मृदूनिअनुराधारेवतीमृगाचित्राः एभिरित्यर्थः लग्नबलंपूर्ववत् उक्तंच तस्मिन्
जन्ममुहूर्तेपिसूतकांतेथवाशिशोः जातकर्मचकर्तव्यंपितृपूजनपूर्वकम् क्षिप्रैश्चरैर्ध्रुवैर्मिश्रैर्द्वादशेप्रथमेन्हिवा केंद्रेगुरौभृगौकार्यंजातकर्मसनातनमि
तिप्रजापतिः सूतकेतुसमुत्पन्नेपुत्रजन्मयदाभवेत् कर्तुस्तात्कालिकीशुद्धिःपूर्वाशौचेनयुध्यतीति संवर्तः जातेपुत्रेपितुःस्नानंसचैलंतुविधीयते त
चशीतोदकेनकार्यम् तत्रजाबालिः कुर्यान्नैमित्तिकंस्नानंशीताद्भिःकाम्यमेवचेति एतद्रात्रावपिकार्यम् तत्रवसिष्ठः पुत्रजन्मनियज्ञेचतथासं
क्रमणेरवेः राहोश्चदर्शनेस्नानंप्रशस्तनान्यथानिशि तच्चउत्तराभिमुखंकार्यम् तदुक्तंतेनैव श्रुत्वाजातंपितापुत्रंसचैलंस्नानमाचरेत् उत्तराभिमुखो
भूत्वानद्यावादेवखातकइति रात्रौउदकादिगमनाशक्तौविशेषमाह साख्यायनः दिवायदाहृतंतोयंकृत्वास्वर्णयुतंतुतत् रात्रिस्नानेतुसंप्राश्स्ना
यादलनसन्नतथावीति अथनामकर्माह अथोनामवर्णाविदध्युः सूतेः सूर्याष्टिविंशाकृतिमितादिवसइति अथोऽनंतरं वर्णाः ब्राह्मणादयः क्रमेणसूतेः
प्रसूतेः सकाशात् सूर्या १२ ष्टि १६ विंशा २० कृति २२ मितदिवसे द्वादशषोडशविंशद्वाविंशमितदिवसेनामविदध्युः कुर्युरित्यर्थःअयमर्थः ब्राह्म
णोद्वादशदिवसे क्षत्रियः शोडशे वैश्योविंशतिमिते शूद्रोद्वाविंशतिदिवसे नामकुर्यादित्यर्थः तच्चोक्तम् बृहस्पतिना द्वादशेदिवसेवापिजन्मतो
दिवसेशुभे षोडशेविंशतौचैवद्वाविंशेवर्णतःक्रमादिति अत्रान्येपि विकल्पाःसंति तत्रव्यासः नामधेयंदशम्यातुकेचिदिच्छंतिसूरयः द्वादशेन्ह्या
हुरन्येतुमासपूर्णेतथापरे अष्टादशेहनितथावदंत्यन्येमनीषिणइति प्रासकालेपिविशेषमाह गर्गःव्यतीपातेचसंक्रांतौग्रहणेवैधृतावपि श्राद्धंविनाशु

मंनेवप्रामकालेपिमानवः अमासक्ताविविषिष्यादौप्रामकालोपिनाचरेदिति यथकालनिरोधस्तमदोषोनास्ति यस्यांक्रियायांसर्वोक्ताःकालेमासवि
नेरपि तस्यानदोषेस्तुठसंयक्ष्वाजीवशुक्रयोरिति अथकालातिक्रमेनक्षत्राण्याह जातमेवेति जातमेजातकर्मोक्तनक्षत्रैर्भैः क्षिप्रैरित्यादिभिर्वा
कार्यं वसुकनारदेन देशकालोपिवसादेःकालातिक्रमणयादि अनस्तगेभृगावीज्येवस्कार्यंचोत्तरायणे चरस्थिरमृदुक्षिप्रनक्षत्रेशुभवासरे चन्द्रता
राबलोपेतेदिवसेचशिशोःपितेति अथामस्याम्यविशेषमाह चरांगमिति चरांगलग्नरिक्ताष्टम्यारमदाम् रिक्ताचतुर्थीनवमीचतुर्दश्यः अष्ट
मीप्रसिद्धा आरोभौमवारः मद शनैश्चर शान्त्यपगतसचरं सचरस्यपमावगतं सौम्यमसौम्यवा रात्रिः प्रसिद्धा अपराह्णोदिनतृतीयोंश
एवामप्रोक्तमस्ता लग्नबलपूर्ववत् तथाचबृहस्पतिः पूर्वाह्णःश्रेष्ठस्तुक्तोमध्याह्नोमध्यमःस्मृतः अपराह्णचराशिंचवर्जयेन्नामकर्मणीति नृ
सिंह सायाह्नेदुष्टयोगेचशनिभूमिजवारयोः रिक्तापर्वाष्टमीविष्टि किंस्तुघ्नंचविशेषतः एतैर्दोषयुतेकालेऽन्नप्राशनमपिनकारयेदिति बृहस्पति शुभ
वारेचषड्वर्गेशुभानांनामसंपदे राशयश्चस्थिराःश्रेष्ठाद्विस्वभावाः शुभैर्युताः नृसिंह लग्नाद्धायष्टमेसर्वेनशुभानामकर्मणीति केषांनामकार्य
मिति संग्रहेउक्तम् देवालयगजाश्वानांवृक्षाणांवापिकूपयोः सर्वोपकारणानांचाथिग्रामानांयोषितांनृणाम् काव्यादीनांकवीनांचपश्वादीनांविशे
षत राजप्रासादसंज्ञानांनामकर्मविशिष्यतइति ॥ १ ॥ अथपालकारोहणभूम्युपवेशनदुग्धपाननिष्क्रमणंचेतिचतुष्टयंवृत्तेकेनाह प्रसूतेःसका
शाद्वादशेदिवसेपालकेसंस्थापोवा अभवालकम्पसेत् निवध्यात् उक्तकालातिक्रमेध्रुवमृदुक्षिप्रमैत्रनक्षत्रैर्निवध्यात् सम्यबलपूर्ववत् सर्पमार्गज

भयावत् पंचपंचचतुर्दिशम् मध्येचसप्तदेयानिबालकस्याहितायवै पूर्वभागेतुरोगत्वंदक्षिणेमरणंध्रुवम् पश्चिमेविकृतोबालोउत्तरेव्याधिसंभवः शेषेतुमध्यनक्षत्रेबालकस्याहितायवै तथाचोक्तबृहस्पतिनास्वसंहितायाम् खट्वारोहस्तकर्तव्योदशमेद्वादशेपिवा षोडशेदिवसेवापिद्वाविंशेदिवसेपिवा तथोक्तभविष्योत्तरे अभीष्टदिवसेपुण्येचद्रतारावलान्विते मृदुध्रुवक्षिप्रभेतुमातावाकुलयोषितः शेषशायिनमार्चित्यप्राक्शीर्षविन्यसेच्छिशुमिति भूम्युपवेशनमाह सौम्येति सौम्योमृगः अश्विनीप्रसिद्धा ईज्यः पुष्यः ध्रुवाणिपूर्वोक्तानि त्र्युत्तरारोहिण्यः इंद्रोज्येष्ठा एभिर्नक्ष

## जन्माहाद्द्वादशेन्हिध्रुवमृदुलघुभौर्वान्यसेत्पालकेऽभेसौम्याश्वीज्यध्रुवेंद्रैर्भुविशुभदिवसेपंचमेमासिदध्यात् ॥

शुभदिवसे रिक्तादिवर्जिते जन्मतः पंचमेमासि भुविभूम्यां अर्भेनिदध्यात् उपवेशयेदित्यर्थः तथाचोक्तंब्रह्मपुराणे पंचमेचतथामासिभूमौतमुपवेशयेत् तत्रसर्वेग्रहाःशस्ताभौमोप्यत्रविशेषतः तिथिंविवर्जयेद्रिक्तांशस्तान्याःशृणुभानिमे उत्तरात्रितयंसौम्यपुष्यर्क्षशुक्रदैवतम् प्राजापत्यंचहस्तश्चशस्तमाश्विनमित्रभम् वराहंपूजयेद्देवंपृथिवींचतथाद्विजान् भूभागमुपलिप्याथतत्रकृत्वातुमंडलम् वाद्यपुण्याहशब्देनभूमौतमुपवेशयेदिति उपवेशनमंत्रस्तत्रैवोक्तः रक्षैनवसुधेदेविसदासर्वगतशिशुम् आयुःप्रमाणसकलंनिक्षिपस्वहरिप्रियइति दुग्धपानमाह एकत्रिंशाद्दिनइति एकत्रिंशमितेदिवसेअर्भेबालकेकंबुनाशंखेनपयः दुग्धयोज्यपाययेदित्यर्थः अत्रनृसिंहः एकविंशाद्दिनेचैवपयःशंखेनयोजयेदिति अथमातुः स्वल्पपय

रत्यपक्षांतरमाह षाअशननिगदितभेरिति अन्नप्राशननक्षमेयोग्यम् भेरित्युपलक्षणम् अन्नप्राशनोक्त अन्यदपिमित्यार्थम् किंलक्षणे अर्मेभ्य व्याशास्य विगत अगु राहुपस्या साम्यगु साधासौ आशाचतस्याआस्यंमुर्खपस्यसतया तस्मिन् राहुवर्जितदिङ्मुखइत्यर्थ यत् व्यग्वा शास्पङ्गति उपलक्षणं तेनक्रूरयोगिन्यादिकमपिवर्ज्यं तथाचोक्तव्योतिर्निबंधे योगिनीराहुक्रूरादिमुखवेधविवर्जयेत् राहुलक्षणं गुरुमान्योर्वसे स्त्राग्न्यामैर्दोशुक्रचदक्षिणे कालराहु कुजेमत्स्यकुउत्तरेबुधमंदयोः लक्षणांतरं इंद्रेवायौयमेरौद्रेतोयाग्निशशिराक्षसे यामार्धमुदयाद्राहुर्भ्रमत्येवं

## एकत्रिंशद्दिनेवाशननिगदितभे कथुनायोज्यमर्भेव्यग्वाशास्येपयोयास्यगमवदुदितोनिष्क्रमोमासितुर्ये ॥ ४ ॥

दिगष्टकशतं उदयात्सूर्योदयात् स्वल्पतः हरिसोमवह्निराक्षसयमवरुणानिलहरालयेष्वेवम् उदयादिभ्रमतिसदाघटिकात्रोमहालयेत्यादि हरिरिंद्र अथ निष्क्रमणमाह अथास्यगमवदुदितोनिष्क्रमोमासितुर्ये तुर्येचतुर्थेमासि अस्यार्भकस्यनिष्क्रमोनिष्क्रमणंगमवत् गमनवदिति यावत् उदित उक्त पूर्वेरत्रयात्राप्रकरणोक्तं सर्वयोज्यमित्यर्थः निष्क्रमणंमुहूर्तादिनोक्तम् अथनिष्क्रमणनाम गृहात् प्रथमनिर्गम अस्त्वायां क्रियायोस्यादायु श्रीनाशनंशिशोरितिपमः उपनिष्क्रमणंकुर्याच्चतुर्थेमासिसावनाहति कारिकायां चतुर्थेमासिपुण्यर्क्षेशुक्लेनिष्क्रमणंभवेत् भास्वंत स्वटंकनस्वामि कृतस्वस्त्ययनाशिशुमिति आदायगेहात्पथिनिर्गम्यपुण्येपुर्वेपताकायम् अभ्यर्च्यतेवतासम्यगाशीयोवाच्यवेदय कृत्वाप्रदक्षिणंगेहमा

नयतिततःस्वकम्, मातृस्वसृगृहंगत्वामातुलादेर्गृहंनयेत् तदाशीर्वचनाद्यैश्चदीर्घायुरभिनंदितः जयंतस्यमतेनायंलिखितःशिशुनिष्क्रमः स्वगृह्यानुसार योजयेत् ॥ ४ ॥ अथकर्णवेधंमदाक्रांतमाहमैत्रैरिति मैत्रैः अनुराधारेवतीमृगचित्राभिः क्षिप्रैः दस्त्रार्काभिजिदीज्यभैः स्थिरभचरभैः स्थिराणिउत्तरात्रयरोहिण्यः चराणि श्रवणत्रयपुनर्वसुस्वात्याः तैः कथंभूतैःस्थिरभचरभैर्न्यानिलांभःपकर्क्षैः विगतानिअनिलाभःपकर्क्षाणियेभ्यस्तानितथातैः अनिलंस्वाती अंभः पः शततारका कर्क्षरोहिणी तद्रहितैरित्यर्थः चैकाफापौषु चैत्रकार्तिकफाल्गुनपौषेष्वित्यर्थः पुंस्त्रीकर्णौ

**मैत्रैःक्षिप्रैःस्थिरभचरभैर्न्यानिलांभःपकर्क्षैश्चैकाफापौष्विनशनिकुजक्षांशवारानपास्य** ॥ पुरुपस्त्रियाः कर्णौ पटु

नाकुशलेन साविधियथास्यात्तथा दक्षवामादिवेध्यौ पुरुषस्यदक्षिणकर्णादिः स्त्रियः वामकर्णादिरित्यर्थः कर्णवेधनेसूचीमाह बृहस्पतिः सौवर्णीराजपुत्रस्यराजतीविप्रवैश्ययोः शूद्रस्यत्वायसीसूचीमध्यमाष्टांगुलात्मिका कर्णवेधविधिस्तुगृह्यपरिशिष्टेउक्तः अथकर्णवेधोवर्षेतृतीयेपचमे वा पुष्येंदुहरिचित्रारेवतीषुपूर्वाण्हे प्राङ्मुखउपविश्य दक्षिणकर्णमभिमंत्रयेत् भद्रंकर्णेभिरिति सव्यंवक्ष्यंतीवेदिति कुमारायमधुरदत्वाथाभिवंद्यात्ततोब्राह्मणभोजनमिति किंकृत्वाइनशनिकुजक्षांशवारानपास्य रविशनिकुजानांऋक्षाणिलग्नानि अंशानवांशाः वाराः प्रसिद्धस्तांस्त्यक्त्वेत्यर्थः पुनः किंकृत्वा रिक्तापर्वेश्वरवसुतिथिनपास्य रिक्ताश्चतुर्थीनवमीचतुर्दश्यः पर्वेपौर्णिमामावास्ये संक्रांतिश्च ईश्वरतिथिरेकादशी व

सुरष्टमी एतानपास्य पुनः किंरुत्वाशभिसंध्येअपास्य स्वष्टम् पुनः किंरुत्स्वा समाब्दमपास्य समवर्षेत्यस्काविषमेवर्षेकर्तव्यमित्यर्थ लग्नव ल प्रागवत् अथनृसिंहः वेध्योकर्णावदंतस्यविषमेब्देपिवाशिशोः शुक्लपक्षेशुभेवारेपौषपुष्योर्जफाल्गुने एकादश्यष्टमीपर्वरिक्तावर्ज्याशुभाव हाः शिष्टास्तिथयःसर्वाःकृष्णेचान्यभिकविना कर्णस्यादितिक्षिप्रमृदुभेस्थापगैःशुभैः गुरौलग्नेषकेप्याद्युरुत्तरासुश्रुतिस्यवेदिति अगस्त्य रपोश्वसंध्ययोर्लग्नेनकुर्यात्कर्णवेधनम् रामावपितयालग्नस्थपतिपिसंस्थितु कर्णवेधनकुर्वीतकुर्यात्चेच्छेदनमवेदिति बृहस्पति मदाकौराश

रिक्तापर्वेश्वरवसुतिथीन्‌रात्रिसंध्येसमाब्दपुंस्त्रीकर्णौसविधिपटुनादक्षवामादिवेध्यौ ॥५॥
मासेषष्ठेष्टमेनुनिगदितमशनंपंचमेसप्तमेवाभीरोरुस्मातिनदाहरिवसुरजनीरिक्तकास्वक्षमेके ॥

वारा सुर्वर्ज्या कर्णस्यवेधने गुरुशुक्रेदुमेंदूनापुष्यावाराश्चाकोदयादिति सत्यहे शातकुंभमयीसूचीवेधनेपुत्रशुभप्रदा राजतीवायसीवापियथा विभवतःशुभा शुभ्रसौम्यगणेरम्येशुभदेशेऽपराह्नको संस्थितेवेधयेत्कर्णौस्त्रीपुंसोर्वामदक्षिणौ शुक्लसूत्रसमायुक्तताम्रसूच्यावेधयेत् वेधात्तृतीय नक्षत्रमसालयेदुष्णवारिणेति देवल कर्णरंध्रेरवेश्छायानाविशेदग्रजन्मनः तंदृष्ट्वाविलयंयांतिपुण्यौघाश्चपुरातनाइति ॥ ५ ॥ अथान्नप्राशनमुच्यते केनाह अन्मत षष्ठमासेअष्टमेवामासेतु नरस्य अशनं अन्नप्राशननिगदितंप्रोक्तं भीरोः कन्यायाः पंचमेसप्तमेवामासे अशनंप्रोक्तम् अथ नं

दाहरिवसुरजनीरिक्तकाः उझंतिमुनयः नंदाः प्रतिपत्षष्ठयेकादश्यः हरिर्द्वादशी वसुरष्टमी रजनीरात्रिः रिक्ताश्चतुर्थीनवमीचतुर्दश्यः ताः स्व र्क्षजन्मनक्षत्रंच एके अ चार्या अत्रउझंति तथाचोक्त जन्मर्क्षेश्रीक्षयंविंद्यादिति जन्मर्क्षंतुपुविवाहान्नप्राशनादिषुबहुभिर्गृह्यते तदग्रेवक्ष्यते पुनः कस्मिन् सदृक्कांशान्हि दृक्कोदृक्काणः अंशोनवांशः अहोदिनं एषासमाहारः सदृक्काशाहः सतोग्रहस्यदृक्काशाहः सदृक्काशाहतस्मिन्कथंभूतेसदृक्कांशान्हि अचांद्रेनवियतेचाद्रदृक्कांशोयास्मिन्तदचांद्रं तस्मिन् चंद्रस्यदृक्काशाहानिर्निंद्यानिक्षीणश्चेत् पूर्णेतुनदोषः अन्येशुभग्रहाणा

## सदृक्कांशान्ह्यचांद्रे ध्रुवमृदुचरभक्षिप्रभेजालिमीनोनांगेकेंद्रत्रिकोणांत्यमृतिषुविमलास्विंदुरिष्टोखिलोंगे ॥ ६ ॥

शुभानीत्यर्थः पुनः कश्चिन् ध्रुवमृदुचरभक्षिप्रभे ध्रुवादीनिप्रसिद्धानि पूर्वमेवोक्तानि तत्रेत्यर्थः पु॰ अजालिमीनोनांगे अजोमेषः अलिर्वृश्चिकः मीनः प्रसिद्धः एभ्योन्यलग्ने मेषवृश्चिकमीनलग्नान्यन्नप्राशने नशुभानित्यर्थः कासु सतीषु केंद्रत्रिकोणांत्यमृतिषु विमलासुसतीषु केंद्राणिप्रथम चतुर्थ सप्तमदशमानि त्रिकोणे नवपचमे अंत्यद्वादशं मृतिरष्टमं परवल्लिंगं द्वंद्वतत्पुरुषयोः एतासुविमलासु पापग्रहरहितासु सतीषु पापग्रहोत्र अनिष्टकारित्यर्थः इंदुश्चंद्रः अखिलः पूर्णः अंगेलग्नेइष्ट॰ अन्नप्राशनेपूर्णचंद्रोलग्नेशुभइत्यर्थः अन्यल्लग्नबलंपूर्ववत् अत्रनारदः षष्ठेमास्यष्टमेवापि पुंसात्स्त्रीणातुपंचमे सप्तमेमासिवाकार्यनवान्नप्राशनंशिशोः रिक्तादिनक्षयंनंदांद्वादशीमष्टमींसमाम् त्यक्त्वान्यतिथयः श्रेष्ठाःप्राशनेशुभवासराइति

अनन्यगतिकं कुर्यान्नित्यंनैमित्तिकंतथेतिस्मरणात् संस्कारक्रमस्तुकात्यायनगृह्यकारिकायामुक्तः गर्भाधानंपुंसवनंसीमंतोन्नयनंततः जातकर्मा भिधेयचनिष्क्रमप्राशनेक्रमात् चूडोपनयनंवेदव्रतानांचचतुष्टयम् गोदानंमेखलामोकोविवाहःषोडशाक्रियाइति अनेनक्रमेणगर्भाद्यन्नाशनांते षुमौढ्यादिकं बुल्ध्यावलोकयेदित्यर्थः तथाचवृहस्पतिः मासप्रयुक्तकार्येषुमुढत्वंगुरुशुक्रयोः नदोषकृत्तदामासलक्षणोवलवानिति यमोपि गर्भे वार्धुषिकेभृत्येश्राद्धकर्मणिमासिके सपिंडीकरणेनित्येनाधिमासंविवर्जयेत् भृगुः सीमंतजातकादीनिप्राशनांतानिचक्रमात् कर्तव्यानिनदोषो

एतच्चौलादिषुझ्झेदथगुरुसितयोर्बाल्यवार्द्धयेनगाहेचाथोशाखेशमौढ्येव्रतमपिनिगमारंभमार्योनकुर्यात् ॥ ७ ॥

स्तिपंचाननगतेगुराविति कात्यायनस्मृतौ गर्भाधानादिकाअन्नप्राशनातामलिम्लुचे आकर्णवेधाःकर्त्तव्यानान्याइत्याहभास्करइति अस्तादिक चूडादिषुवर्जनीयमित्याह तएच्चैलादिषूझ्झेदिति एतद्गुरुसितास्तादिकचूडादिषुकर्मसुउझ्झेत्यजेत् अथवालत्ववृद्धत्वप्रमाणमाह अथगुरुसित योरिति गुरुसितयोर्गुरुशुक्रयोर्बाल्यवार्द्धेवालत्ववृद्धत्वेनगाहे सप्ताहे सप्ताहंबाल्यंसप्ताहंवार्ध्यमिति वालत्वंवृद्धत्वं वहुविधमस्तितत्रमध्यमः पक्षोत्रांगीकृतः अथशाखेशस्यअस्तेवर्ज्यमाह अथोशाखेशमौढ्यइति शाखेशोवेदपतिर्वक्ष्यमाणः तस्यमौढ्येअस्तेव्रतं मौंजीबंधनंनिगमारंभ मपिआर्यः श्रेष्ठोनकुर्यात् तस्यास्तेव्रतादिकृतेसति वटोर्मूर्खत्वंस्यात् ननुवेदारंभेमूर्खत्वंघटतेवेदपतित्वात् व्रतेमूर्खत्वंकिमुक्तं उच्यते व्रतबंधस्तु

ज्योतिर्विवरमे जन्मर्क्षे श्रीसपर्यिपात्कर्मर्क्षे चातिसौम्यकम् आधानर्क्षेषबालानामन्नप्राशनेरोगनाशनम् एवन्नारदः श्रीपसौम्यसितानांसद्भकाणदिव सोशका बालानप्राशनेशस्तानथप्रकांकजाख्याभिति अर्णवे गोभ्यौकुम्भस्तुलाकन्यासिंहकर्किमगोयमः एताम्बराशय शस्तानमेषस्मपशाभि काऽङ्गितिनारदः यथास्यमद्गुक्षिप्रनसत्र्ये पुनर्नवनङ्गति स्रोलमेकुर्वीत्याह ॥ १ ॥ अथयेपुंसस्कारेपुगुरुशुक्रस्ताविदोषाभाव येतुवोपः बालत्वस्व त्वपमार्ग शास्त्रेशस्यमोढपेक्षिनकायाविति चतुष्पं एवैकेनाह गर्भाधानाशनान्तेपुगमाधानादि अन्नप्राशनान्तेपु कर्मसु गुरुसितयोर्बाल्यवार्ध्येच

गर्भाधनाशनान्तेपुनगुरुसितयोर्बाल्यवार्ध्येचमौढ्यंजत्यात्कालस्यरोधाद्धरिगुरुमयनयाम्यमूनाधिमासौ ॥

यामौढ्यंगुरुशुक्रमूढत्वंनजह्यात् नत्यजेत् कस्माद्धेतो कालस्यरोधात् यतः शास्त्रेगर्भाधानानि अन्नप्राशनान्तानां कर्मणां कालनिरोधः कृतोस्तित स्माद्धेतोः तथाचमांडव्य निस्यपानेग्रहेजीर्णेप्राशनान्तेपुसमग यपूप्रवेशमागव्ये मौढ्यंगुरुशुक्रयोरिति हरिगुरु सिंहस्थितम् बृहस्पतिम् याम्य मयनंदक्षिणायनम् ऊनाधिमासौक्षयमासाधिमासौनत्यजेत् कालस्परोधादित्येतस्पर्दंगुण्याधर्गतव्यं तपथा प्रसूतिसमयएवजातकर्मविहित म् तमकालनिरोधात् किमप्यस्ताधिकार्वितं अन्नप्राशनंतु मासेषष्ठेऽष्टमेवेतिपक्षद्वयेनमासद्वयेविहितम् तमपस्मिन्मासे मौढ्यादिकनस्या नपकर्तव्यं कालस्यसाधकाशत्वात् तपोरधिमासपोर्यदि सिंहस्थगुर्वादिनिरोधःस्यात् सोप्यमनुष्ठितनीयः एवंगर्भाधानादिषुविचारणीय

नसहक्रियमाणेनदोषइत्याह साकंयत्रोपनीत्याक्रियतइहतदायन्निरोधोनहिस्यादिति यत्रउपनीत्यासाकंउपनयनेनसहक्रियते तदाइहा स्मिन्चौले अयमुक्तोनिरोधश्चैत्रमासमातृगर्भलक्षणोनस्येवस्यात् तदुक्तंतेनैव सहोपनीत्याकुर्याच्चेत्तदादोषोनाविद्यतइति अंवार्तवेनिषेधमाह जह्यादवार्तवेऽदोव्रतमुपयमनंचाविशुद्धेःशुभार्थीइति अंवार्तवेमातृरजसि अदः अनतरोक्त चौलमित्यर्थः व्रतंमौंजी उपयमनविवाहःआविशुद्धेःशुद्धिपर्यंतं शुभार्थीनर.एतत्रयंजह्यातनकुर्यादित्यर्थः तथाचमनुस्मृतौ उद्वाहव्रतचूडासुमातायदिरजस्वला तदानमंगलकार्यंशुध्दौ

साकंयत्रोपनीत्याक्रियतइहतदायन्निरोधोनहिस्याज्जह्यादंवार्तवेदोव्रतमुपयमनंचाविशुद्धेःशुभार्थी ॥ ८ ॥
कार्यंवर्णैरिनारार्किशनिषुनिखिलैर्ज्ञत्रयेशुक्रसोमेद्व्यंत्यद्यादित्यशाक्रेंदुभैरिनहरितस्त्रित्रिभैश्चौकर्म ॥

कार्यंशुभेच्छुभिः अन्यमुहूर्तालाभेकारिकानिबंधेशांतिकमुक्तम् अलाभेसुमुर्त्तस्यरजोदोषेतुसंस्थिते श्रियंसंपूज्यतत्कुर्यांद्वृत्रहत्याभयंकरी हेर्मीमाषामितापद्माश्रीसूक्ताद्यधेनार्चयेत् प्रत्यृचपायसहुत्वाभिषिच्यशुभमाचरेत् सूतिकोदक्ययोःशुद्धौगादद्याद्क्रमपूर्वकम् प्राप्तेकर्माणिशुद्धि.स्यादितरस्मिन्नशुद्ध्यतीति उदकीरजस्वला ॥ ८ ॥ अथवर्णविशेषेणवारविशेषंतथानक्षत्राणिलग्नवलंचवृत्तेकेनाह कार्यमिति वर्णैर्ब्राह्मणादिभि.यथाक्रमेण इनारार्किशनिषुचौलकर्मकार्यमित्यन्वयः इनःसूर्यः आरोभौमः आर्किःशनिः शनिःप्रसिद्धः तेष्वित्यर्थः एतदु

वेदाध्ययनार्थकीर्तते तस्मात्तत्रापिमूर्धसंघट्टे तथाचपारिजातः उपनीयगुरुःशिष्यंमहाव्याहृतिपूर्वकम् वेदमध्यापयेदेनंशौचाचारांश्चशि
क्षयेत् प्रतिवेदंब्रह्मचर्यंद्वादशाब्दानिपंचवा ग्रहणांतिकमित्येकेकेशांतश्चैवषोडशेति यज्ञानांतपसांचैवशुभानांचैवकर्मणाम् वेदएवद्विजातीनां
निःश्रेयसकरःपरः तथाकात्यायनगृह्यसूत्रे वेदंसमाप्यस्नायाद्ब्रह्मचर्यंवाष्टाचत्वारिंशकं द्वादशकेप्येकेगुरुणानुज्ञातइत्यादि ॥ ७ ॥ अथचौलं
सनिर्णयंवृत्तेनाह चौलमितिकार्यं वर्णैरिति अन्वयः श्लोकेनान्वयः चूडाकरणं माघादिपंचसुमासेषु अमधुपुष्पेमरहितेषुगादितमुक्तम् तथाचो

चौलमाघादिपंचस्वमधुपुगादितद्वित्रिपंचोन्मितेऽब्देस्वाचाराद्वासगर्भायदिभवतिजनन्यत्रनोकार्यमेतत् ॥

कंनारदेन माघादिपंचकेचौलंहित्वाक्षीणविधुंमधुमिति त्रिपंचोन्मितेऽब्दे द्वितीयेतृतीयेपंचमेवर्षेस्वाचाराद्वा स्वकुलाचारतोवा उक्तंचकात्याय
नगृह्ये सांवत्सरिकस्यचूडाकरणंतृतीयेवाप्रतिहतेषोडशवर्षस्यकेशांतोयथामंगलंवासर्वेषामिति सांवत्सरिकस्यअतिक्रांताब्दस्येतिहरिहर
मिश्रेण्योव्याख्यातम् तथाचसत्कुशिष्य आद्येऽब्देकुर्वतेकेचित्पंचमेप्येद्वितीयके उपनीत्यासहैवेतिविकल्पःकुलधर्मतइति सगर्भायदिभवतिज
नन्यत्रनोकार्यमेतत् अथउत्कर्षेपुद्विभिर्वषाब्दकेपुजननीकुमारस्यमातायदिसगर्भाभवतिस्यात्तदा एतच्चौलंनोकार्यम् पंचम मासादूर्ध्वंगर्भि
ण्यांसत्यामपिकार्यमित्यर्थसिद्धम् ॥ अथनारदः सूनोर्मातरिगर्भिण्यांचूडाकर्मनकारयेत् पंचमासादधःपश्चात्तुगर्भिण्यामपिकारयेत् उपनयने

नसहक्रियमाणेनदोषइत्याह साकंयत्रोपनीत्याक्रियतइहतदायन्निरोधोनहिस्यादिति यत्रउपनीत्यासाकंउपनयनेनसहाक्रियते तदाइहा स्मिन्चौले अयमुक्तोनिरोधश्चैत्रमासमातृगर्भलक्षणोनह्येवस्यात् तदुक्ततेनैव सहोपनीत्याकुर्याच्चेत्तदादोषोनाविद्यतइति अंबार्तवेनिषेधमा ह जह्यादत्रार्तवेऽदोव्रतमुपयमनचाविशुद्धेःशुभार्थीइति अत्रार्तवेमातृरजसि अदः अनतरोक्त चौलमित्यर्थः व्रतंमौंजी उपयमनविवाहःआ विशुद्धेःशुद्धिपर्यंत शुभार्थीनरःएतत्रयंजह्यातनकुर्यादित्यर्थः तथाचमनुस्मृतौ उद्वाहव्रतचूडासुमातायदिरजस्वला तदानमगलकार्यंशुध्दौ

साकंयत्रोपनीत्याक्रियतइहतदायन्निरोधोनहिस्याज्जह्यादंबार्तवेदोव्रतमुपयमनंचाविशुद्धेःशुभार्थी ॥ ८ ॥
कार्यंवर्णैरिनाराकिंशनिषुनिखिलैर्न्नत्रयेशुक्लसोमेज्यंत्यब्यादित्यशाक्रेंदुभिरिनहरितस्त्रित्रिभैश्चौकर्म ॥

कार्यंशुभेच्छुभिः अन्यमुहूर्तालभेकारिकानिबधेशांतिकमुक्तम् अलाभेसुमुर्त्तस्यरजोदोषेतुसंस्थिते श्रियंसंपूज्यतत्कुर्याद्वृत्रहत्याभयंकरी हैमींमाषमितापद्माश्रीसूक्तावधिनार्चयेत् प्रत्यृचपायसहुत्वाभिषिच्यशुभमाचरेत् सूतिकोदक्ययोःशुद्धोगादद्याक्रमपूर्वकम् प्राप्तेकर्माणिशु द्धिःस्यादितरस्मिन्नशुद्ध्यतीति उदकीरजस्वला ॥ ८ ॥ अथवर्णविशेषेणवारविशेषतथानक्षत्राणिलग्नवलंचवृत्तैकेनाह कार्यमिति वर्णै र्ब्राह्मणादिभिःयथाक्रमेण इनाराकिंशानिषुचौलकर्मकार्यमित्यन्वयः इनःसूर्यः आरोभौमः आर्किःशनिः शनिःप्रसिद्धः तेष्वित्यर्थः एतदु

ऽभराते चित्रेणरविवारे क्षत्रियेणसोमवारे वैश्येनशनिवारे शूद्रेणापिशनिवारे चौलंकर्तव्यमित्यर्थ शूद्रस्यद्वादशसंस्काराउक्ताः वेदो
व्रतोपनयनमहानाम्नीमहाव्रतम् विनाद्वादशशूद्राणांसंस्कारानाममंत्रतइति निखिलैरिति निखिलैश्चतुर्भिर्वर्णैरविशेषेण ह्रस्वेषुपक्षे शु
क्लपक्षगतसोमवारेकार्यम् कृष्णपक्षसोमवारोविनिंदितः क्षीणत्वात् अमनाख्यः अपर्वरिक्तातिथिपुशुक्लेज्यक्षेंदुभास्करइति बृहस्पति सोम
वारःसितेपक्षेकृष्णपक्षेतिगर्हितः बुधवारःशुभःप्रोक्तःपापग्रहयुतेबुधे पापग्रहाणांवारादौविप्राणांशुभदोरविः क्षत्रियाणांक्षमासूनुर्विट्शूद्राणांश

पूनेर्कारार्किशुक्रागतकविनिखिलामृत्युगामृत्युदास्युर्व्यंजा संतोत्यक्षत्वस्यजगुहशशिनोरात्रिसध्येचरिक्ता १

नि॰शुभइति केद्यस्पक्ष्यादिस्यशार्केशुभिः अत्सार्धेविद्यंत्यरेवत्याश्विन्यो इत्यादिस्तं पुनर्वसुपुष्यो शाकंज्येष्ठा इदुर्मृगः तेःपुन के॰वनाहरित
चित्रिभेः हनोहस्तः हरिःश्रवण॰ताभ्यांचित्रिभेः हस्ताविभिः श्रवणादिभिरित्यर्थःयथाचनारदःवस्त्रादितीज्यचंद्रेषुपूष्मानिशुभान्यमत चौलक
र्मणिहस्तत्रीणिचीणिभीणिचविष्णुभादिति पूनेर्कारार्किशुक्राः अथचौलेमृत्युदास्युःपूनेसप्तमेअर्कारार्किशुक्राः अर्कःसूर्यःआरोभौम अर्कस्या
पत्यमार्किःशनि शुक्रःप्रसिद्धः एतेषुमारोमृत्युदाइति चतुर्णांसमानफलमुक्तं वसिष्ठेनात्रविशेषफलमुक्तम् आग्नेर्भास्करेशौरेमृत्युःस्याद्भूमि
जेतथा शुक्रेसोत्पत्तिनाशःस्यान्मंदभाग्यंशनैश्चरइति अत्रचतुर्णामपिसामान्येनमृत्युफलमुक्तम् तदारिन्यायमरणंवरमितिन्यायेननदोष

